श्रीः



# प्रबोधचन्द्रिका

श्रीविक्रमार्कतनयपटनाधीश

श्रीवैजलभूपतिना

विरचिता

सांगलीति प्रसिद्धराजधानीमहाराजसंस्थापितकाशी-
स्थसंस्थानाधिपतिना खाडिल्करेत्युपाह्वेन हरिपन्तेन

काश्यां

श्रीराजराजेश्वरीनाम्नि यन्त्रालये मुद्रयित्वा प्रकाशिता



यह पुस्तक काशी मुहल्ला ब्रह्माघाट पर महाराज
सांगली कर के बाडे मे हरिपंत के पास अथवा इसी
प्रेस मे मिलेगी मू० ।)

पुस्तक सं० १००० सं० १९४४फा० व० ५ गु०

# ॥ अथ प्रबोधचन्द्रिकाप्रारम्भः ॥

श्रीगणेशाय नमः ॥ हरिहरगुरुभक्तः सर्वलोकानुरक्तस्त्रिभु-
वनगतकीर्तिः कान्तिकन्दर्पमूर्तिः । रणरिपुगणकालो वैजल-
क्षोणिपालो जगति जयति दाता सर्वकर्मावधाता ॥ १ ॥
यच्छ्रावणीदनचन्द्रचकोरधीरः श्रीविक्रमःकृतजयी नयतत्त्ववे-
त्ता ॥ चोहानवंशतिलकः पटनाधिनाथो राजा चिरं जयति
वैजलदेवनामा ॥ २ ॥ रामो मेभिहितं करोतु सततं रामं भजे
सादरं रामेणापहृतं समस्तदुरितं रामाय दत्तं धनम् । रामा-
ङ्क्तिरभीप्सिता सरभसं रामस्य दासोस्म्यहं रामे रंजतु मे
मनः करुणया भो राम मां पालय ॥ ३ ॥ श्रीमद्वैजलदेवेन
रामभक्तिरतात्मना । इति चिन्तितमेकान्ते कदा चित्तिष्ठता
सता ॥ ४ ॥ अस्थि वज्रमयं यस्य यस्य चर्म च चर्मवत् । स
दधीचिः स कर्णो वा नामिष्ठत्सु चरं भुवि ॥ ५ ॥ न संप्रति
शरीराणि न राज्यानि धनानि वा । तेषां स्वर्गगतानां च की-
र्तिर्जागर्ति भूतले ॥ ६ ॥ पद्मिनीपत्रजलवत्संसारे सर्वमस्थि-
रम् । कीर्तिरक्षरसंबद्धा स्थिरा भवति भूतले ॥ ७ ॥ इह लो-
के सुखं येन परलोकेपि जायते । तदेव प्रत्यहं कर्म कर्तव्यं

दूरदर्शिना ॥ ८ ॥ संसाराम्भोधितरणं रामनामानुकीर्तनम् । रामनामान्विता तस्मात्प्रक्रिया क्रियते मया ॥ ९ ॥ बालानां सुप्रबोधाय तोषाय विदुषामपि । आकल्पमपि संसारे कीर्तिसंस्थापनाय च ॥ १० ॥ चिन्तयन्निति निर्यातः क्रीडंतं स्वीहिराधरं । श्रीमान्वेजलभूपालो विलोक्येत्यब्रवीत्सुतम ॥ ११ विद्यया द्योतते राज्यं विद्यया जीयते रिपुः । विद्यया जायते सत्यं विद्यया लभते यशः ॥ १२ ॥ विद्यया जायते धर्मो धर्मेणार्थः प्रजायते । अर्थेन जायते राज्यं सुखं राज्येन जायते । १३ । विद्या पितेव हितकृद्विद्या मातेव रक्षिका । विद्या प्रियेव सुखदा विद्या कल्पलतोपमा ॥ १४ ॥ धनानामथ सर्वेषां विद्याधनमनुत्तमम् । वर्धते दीयमानं यन्नान्तरायैर्विनश्यति । १५ । नृपैर्न गृह्यते रोषाद्दायादैर्न विभज्यते । भृत्यैर्न भुज्यते क्वापि न च संक्षुप्यते क्वचित् । १६ । विद्याधनविहीनो यः स कापुरुष उच्यते । तस्माद्विद्यार्जने पुत्र यत्नं कुरु निरन्तरम् । १७ । यावन्न राज्यचर्चा ते यावन्न विषयग्रहः । यावन्न यौवनमदस्तावद्विद्यामुपार्जय । १८ । औदार्यधैर्यगांभीर्यशौर्यादिगुणसंयुतः । विद्याविनयसंपन्नः सर्वेषां भवति प्रियः । १९ । दानेन दयया चैव युद्धेन निजकर्मणा । दानवीरो दयावीरो युद्धवीर इति स्मृतिः । २० । दधीचिर्दानवीरोभूद्दयावीरः शिबिर्नृपः । हनूमान्वीरो युद्धवीरोभूमिद्दर्शममसो नयः । २१ । स्वकर्मणैव पु-

रुष: प्रतिष्ठाधिष्ठितो भवेत्। यथा रामश्च कृष्णश्च परशुरा-
मश्च पौरुषात्। २२। इह राजा च रंकश्च प्राक्तनेन स्वकर्म-
णा। इह दुःखं सुखं चापि भुंक्ते प्राक्तनकर्मणा। २३। स्व-
र्गं च नरकं वापि भजते निजकर्मणा। स्वकृत: कर्मपाशोयं
सर्वेषां सुदुरत्यय:। २४। एवं वदंतं पितरं विनीत: श्रीहरि-
राधर:। कृतांजलिपुटो भूत्वा सव्रीडमिदमब्रवीत्। २५।
मातापितृभ्यां विरसं परिणामरसावहं। तिक्तं कटुकषायं
च भेषजं पाय्यते सुत:। २६। श्रवणांजलिना पीतमुपदेशा-
मृतं तव। आज्ञाप्यतां देव मया किमिदानीमधीयतां। २७।
श्रीमान्वैजलभूपाल: क्रीडंतं श्रीहरिराधरं। सुप्रीय परितु-
ष्टात्मा सुतमित्यवदत्पुन:। २८। नीतिविद्यास्त्रविद्या च द्वे
राज्ञोभ्यर्हिते सदा। तयोरप्यधिका नीतीराजंत्र हि क्रियते
यया। २९। क्रियाकारकविज्ञानान्नीति: सम्यक् विविच्यते।
स्वादित्यादिपरिज्ञानाद् बुद्धि: शाब्दी च वर्धते। ३०। विना
व्याकरणं वाणी रमणी रमणं विना। विवेकं च विना लक्ष्मी-
र्न सुखाय कदाचन। ३१। तस्माद् व्याकरणं पूर्वं पठ त्वं बु-
द्धिवृद्धये। पश्चान्नीतिं पठित्वा त्वं राजंत्र भज यथासुखम्। ३२।
शक्तिराज्यांगसेनाङ्गत्रिवर्गोपायषड्गुणान्। यथाकालं प्रयुञ्जा-
नो राजा राज्यं हि रक्षति॥३३॥ क्रियाकारकसंबन्धाज् ज्ञान-
मुद्दीप्यते यया। उत्कृष्टा प्रक्रिया सेयं त्वया सम्प्रति पठ्यता-
म्॥ ३४॥ प्रबोधचन्द्रिका नाम रामनामसमाश्रिता। अज्ञा-

नातिमिरध्व सकारिणी हितकारिणी॥३५॥बह्वः प्रक्रियाग्रन्थाः सन्ति चेत् संतु का क्षतिः। न मालतीमधु क्वापि मधुलिड्भिरनादृतं ॥ ३६ ॥ विभक्तिज्ञानतो यस्मात्प्रबोधः प्रतिपद्यते। तस्मादिह प्रथमतो विभक्तिः प्रतिपाद्यते ॥ ३७ ॥ स्वादिस्त्यादिर्विभक्ती द्वे स्वादौ सप्त विभक्तयः। एकद्विबहुसंज्ञानि वचनानि च सप्तसु ॥ ३८ ॥ प्रथमा च द्वितीया च तृतीया च यथाक्रमम्। चतुर्थी पञ्चमी षष्ठी सप्तमी चेति ताः क्रमात्॥३९॥ प्रथमैव विभक्तिः स्यादुक्ते कर्तरि कर्मणि। अनुक्ते कर्मकर्त्रादौ द्वितीयाद्या विभक्तयः ॥ ४० ॥ तत्रोक्ते कर्तरि यथा रामो जयति वैरिणम्। रणे रामौ च रामाश्च जयतश्च जयन्ति वा॥४१॥ संबोधनेऽपि प्रथमा विभक्तिर्भवति ध्रुवम्। यथा हे राम हे रामौ हे रामा इत्यनुक्रमात् ॥ ४२ ॥ हेशब्देन विनापि स्यात् क्वचिदन्तेऽपि हे भवेत्। यथा रामप्रसीदत्वं राम हे त्वां भजाम्यहम् ॥ ४३ ॥ इत्युदाहरणं दत्तमुक्ते कर्तरि केवलम्। अथोदाहरणं किञ्चिदुक्ते कर्मणि दीयते ॥ ४४ ॥ न जीयते न जीयेते न जीयन्ते रणाङ्गणे। रामो रामौ च रामाश्च शत्रुभिश्चेति निश्चितम् ॥४४॥प्रथमान्तस्य कर्तुश्च कर्मणश्चानुगम्यते। संख्या त्याद्यैरनुक्तस्य न कदापीति बुध्यताम् ॥४६॥ अनुक्ते कर्मणि भवेद् द्वितीया सानुगद्यते। रामं रामौ च रामांश्च भजाम्यहमहर्निशम्। ४७॥ अनुक्ते कर्तरि भवेत्तृतीया करणेपि च। यथा रामेण रामाभ्यां रामैर्वा जीयते रिपुः ॥ ४८ ॥ करणे दी

यते किञ्चिदुदाहरणमुत्तमम् । रामः शिरांसि शत्रूणां निकृन्तति शितैः शरैः ॥ ४९ ॥ अनुक्ते सम्प्रदाने स्याच्चतुर्थी सा निगद्यते । फलं रामाय रामाभ्यां रामेभ्यो दत्तमुत्तमैः ॥ ५० ॥ अनुक्ते स्यादपादाने पञ्चमी साभिधीयते । यथा रामाच्च रामाभ्यां रामेभ्यो मुक्तिरीप्सिता ॥ ५१ ॥ अनुक्ते स्यात्तु संबन्धे षष्ठी तस्या उदाहृतिः । रामस्य रामयोश्चापि रामाणां कीर्तिरुत्तमा ॥ ५२ ॥ अनुक्ते चाधिकरणे सप्तमी जायते तथा । रामे च रामयोश्चापि रामेषु श्रीर्विहारिणी ॥ ५३ ॥ इत्युदाहृतयो दत्ताः सप्तस्वपि विभक्तिषु । केन चित्कारणेनासामन्यथावस्थितिर्भवेत् ॥ ५४ ॥ शीङ्स्थासामधिपूर्वाणामाधारः कर्मवद्यथा । अधिशेते वनं रामो ऽध्यास्ते चाप्यधितिष्ठति ॥५५॥ अन्वधिप्रतिशब्दानां योगे कर्म भवेद्यथा । अनुरामं रमे राममभिधावति मे मनः ॥ ५६ ॥ प्रति रामं गमिष्यामि मनो रामे प्रमोदति । कालाध्वनोश्च संयोगे दिनं क्रोशं निषीदति ॥५७॥ अन्तरेणान्तरायोगे द्वितीया स्याद्विनापि च । न मुक्तिर्जायते राममन्तरेणान्तराविना ॥ ५८ ॥ समयानिकषाहाधिगुपर्यध्यधसामपि । आङ्स्वयोगेपि भवेद् द्वितीया तदुदाहृतिः ॥ ५९ ॥ काननं समया रामो निकषा भरतः पुरीम् । हा सीतां विपिने शून्ये रावणं धिक् जहार यः ॥ ६० ॥ हरमूर्धानमुपरि गङ्गा भाति तथा हरे । अधिपादांबुजमधो रामपादमहं रमे॥६१॥ आरामपादमानिशं प्रणतिः क्रियते मया ॥

राममावर्त्तति स्वान्तं मदीयं नावसीदति ॥ ६२ ॥ क्रियावि-
शेषणं कर्म नपुंसकमपीष्यते। यथा निःशङ्कमनिशं लङ्कां रा-
मोवलोकते ॥ ६३ ॥ तृतीया जायते हेतौ तथेत्थंभूतलक्षणे।
रामभक्त्या भवेन्मुक्तीरामश्चापेन कानने ॥ ६४ ॥ सहार्थे च
यथा रामो लक्ष्मणेन सहच्छति । विनायोगे यथा रामो
लक्ष्मणेन विना नहि ॥ ६५ ॥ तृतीया सम्प्रदानार्थनिन्दाचेत्त
दुदाहृतिः । मालां दास्याऽतिपापीयान्ब्राह्मणः सम्प्रयच्छते ॥
६६ ॥ चतुर्थी गमनार्थस्य धातोः कर्मणि वा यथा । जगाम
रामभद्रोसौ वनाय पितुराज्ञया ॥ ६७ ॥ तादर्थ्येपि यथा दा-
रु राम यूपाय तिष्ठति। क्रियायोगे यथा रामो भोजनाय प्र-
वर्तते ॥ ६८ ॥ नमःस्वस्त्यादियोगे च यथा रामाय ते नमः।
स्वस्ति रामाय देवाय स्वाहा पित्रे स्वधा तथा ॥ ६९ ॥ सी-
ताविरहखिन्नोपि रामोलं रावणाय हि । वषट्काल्ये चतुर्थी
स्यान्मन्यकर्मण्यनादरे ॥ ७० ॥ यथाहं त्वां तृणं मन्ये मन्ये
त्वाहं तृणाय वा। चतुर्थी चापि रुच्यर्थधातोः प्रीतेर्भवेद्यथा ॥
७१ ॥ रामाय रोचते नित्यं रावणस्य वधोद्यमः । ईप्सिते स्पृ
हधातोश्च रामाय स्पृहयाम्यहम् ॥ ७२ ॥ उत्तमर्णे च धारेस्तु
तुभ्यं स्वं धारयाम्यहम्। क्रुध्यादिकर्मणि यथा रामः कुप्यति
शत्रवे ॥ ७३ ॥ क्रुध्यत्यसूयति द्रुह्यत्यलमीर्ष्यति संगरे। रामः
शत्रुगणायेति चतुर्थी समुदाहृता ॥ ७४ ॥ पञ्चमी जायते हे-
तौ रामान्मुक्तिः प्रजायते । भयहेतौ यथा रामाद्बिभेति युधि

रावण: ॥ ७५ ॥ यतस्त्राणं यथा तत्र राम त्रायस्व मां भवात्।
यतोऽधीते यथाधीते रामात् संदेशमाञ्जनिः ॥ ७६ ॥ यतो
जन्म यथा गङ्गा हरिपादात्प्रजायते। तस्मादुत्कर्षणं तत्र यथा
रामो वरोन्यतः ॥ ७७ ॥ वारणं च यतस्तत्र यथा दुर्विनयात्
पिता। तनयं वारयत्येष रामो मां नरकार्णवात् ॥ ७८ ॥
अन्यार्थादिप्रयोगे च यथान्यो राम ईश्वरात्। भिन्नः कृष्णात्प्र-
जास्रष्टा भिन्नो रामाद्विभीषणः ॥ ७९ ॥ रामान्नेवेतरः सेव्यो
न च रामादृते सुखं। दिक्देशकालयोगे च ग्रामात् पूर्वं स्थि-
तिर्मम ॥ ८० ॥ उत्कलात् पश्चिमं ज्ञेयं पट्टनाराज्यमुत्तमम्।
रामोसौ लक्ष्मणाज् ज्येष्ठो विनायोगेपि दृश्यते ॥ ८१ ॥ विना
रामान्न भक्तिः स्याद्यतः स्यात्प्रेक्षणं ततः। पञ्चमो स्याद्यथा
रामः प्रासादात्प्रेक्षते पुरीम् ॥८२॥ स्मरणार्थस्य धातोर्वा षष्ठी
कर्मणि तद्यथा। स्मरामि रामचन्द्रस्य चरणांभोजयोरहम्॥८३॥
हिंसार्थस्य यथा रामः शत्रोरुच्चाटयत्यलम्। पिनष्टिरुजतीत्यादि
ज्ञेयं सर्वत्र पण्डितैः ॥ ८४ ॥ तृप्त्यर्थधातोः करणे षष्ठी वा जा
यते यथा। तृप्तो रामः फलैरेव फलानां वा वने वसन् ॥८५॥
अनादरे च षष्ठी स्यात्सप्तमी वा यथा तव। पश्यतो हरति द्रव्यं
तस्करस्त्वयि पश्यति ॥ ८६ ॥ निर्धारणे च षष्ठी स्यात्सप्तमी च
यथा वरः। रामो नृपाणां शूराणां नृपेष्वपि धनुर्धरः ॥ ८७ ॥
कृत्ययोगेथवा षष्ठी भवेत्कर्तरि तद्यथा। रावणस्य
पुरी लंका गन्तव्या रामभूपतेः ॥ ८८ ॥ सप्तमी सतियोगे

स्यात् सति रामे कुतो भयम् । सत्यर्थयोगेपि तथा रामे नरकभीर्नहि ॥ ८९ ॥ निमित्तात् कर्मयोगेपि शार्दूलं हन्ति चर्मणि । निमित्तेपि यथा मुक्तौ रामोयं सेव्यते मया ॥ ९० ॥ क्रियया चेत् क्रिया लक्ष्या तत्र स्यात् सप्तमी यथा । मयि खादति रामोगान् मय्याचामत्युपागतः ॥९१॥ एवं सर्वेषु लिङ्गेषु विभक्तिवचनेषु च । उक्तानुसारि विज्ञेयमुदाहरणमुत्तमम् ॥ ९२ ॥ प्रबोधचन्द्रिकायां च कृतौ वैजलभूपतेः । विभक्तिचन्द्रिकामध्ये समाप्ता स्वादिचन्द्रिका ॥ ९३ ॥

अथ त्यादिविभक्तीनामुदाहरणमुच्यते । त्रयःस्युः पुरुषास्त्यादेः प्रथमो मध्यमोत्तमौ ॥ ९४ ॥ एकद्विबहुसंज्ञश्च त्रिषु स्याद्वचनत्रयम् । उदाहरण एवैषां रूपमाविर्भविष्यति ॥ ९५ ॥ प्रथमः शेषयोगे च युष्मद्योगे च मध्यमः । उत्तमोस्मद्प्रयोगे च गम्यमानेप्ययं विधिः ॥ ९६ ॥ यथा जयति रामोरीन् रामौ च जयतो रिपून् । रामा जयन्ति संग्रामे दुर्जयान् वैरिणां गणान् ॥ ९६ ॥ जयसि त्वं रिपुं राम जयथोरीन् युवां रणे । हे रामौ युधि हे रामा यूयं जयथ वैरिणः ॥ ९८ ॥ अहं जयामि रामस्य भक्त्या नरकमागतम् । आवां जयावः कृतिनौ जयामो वयमुत्तमम् ॥ ९९ ॥ त्यादीनां न व पूर्वार्धं परस्मैपदमुच्यते । उत्तरार्धं न वैवैव मात्मनेपदसंज्ञकम् ॥ १०० ॥ परस्मैपदमादिष्टं धातोः कर्तरि केवलम् । यथा खादति रामोयं लक्ष्मणेन सहौदनम् ॥ १ ॥ आत्मनेपदमादिष्टं भावे कर्मणि कर्तरि ।

तत्र भावे यथाऽरण्ये रामेणैव न शय्यते ॥ २ ॥ यथा कर्मणि रामेण जीयते शत्रुरुद्धतः । एवं कर्तरि रामस्य शोभते मुख सिन्धुवत् ॥ अकर्मकाः कर्महीना धातवो द्विविधा मताः । सकर्मकाणां धातूनां त्यादिः कर्मणि कर्तरि ॥ ४ ॥ अकर्मकाणां धातूनां भावे कर्तरि जायते । रम्यते रामचन्द्रेण रामोसौ रमते वनम् ॥ ५ ॥ यथा कर्तरि रामोसौ संख्ये जयति वैरिणम् । यथा कर्मणि रामेण जीयते रिपुरुद्धतः ॥ ६ ॥ प्रधाने कर्मणि त्यादिर्जायते हि द्विकर्मणाम् । यथा रामेण सीतैषा नीयते निर्जनं वनम् ॥ ७ ॥ अप्रधाने दुहादीनां यथा रामेण दुह्यते । पृथिवीरत्नमुद्योतं याच्यते समरे रिपुः ॥ ८ ॥ मया च रुध्यते बुद्धिः श्रीरामपदपङ्कजम् । सीतया पृच्छ्यते रामः पन्थानमति भीतया ॥ ९ ॥ भिक्ष्यते लक्ष्मणेनासौ रामोनुग्रहमुत्तमम् । रामेण नीयते स्नानं रामं संभाष्यतेनुजः । शास्यते लक्ष्मणो धर्मं दण्ड्यते दुर्जनो धनम् । मथ्यते जलधी रत्नमिवमादिकमूह्यताम् ॥ ११ ॥ कर्तृकर्मणिगत्यादेर्ण्णौ: स्त्रीये च कर्मणि । यथा दशरथेनाद्य रामःसंप्राप्यते वनं ॥ १२ ॥ ओदनं पाच्यते विप्रे रामचन्द्रेण धीमता । क्राम्यन्तं घोटकाः शूरैः सेवकैर्दाप्यते धनम् ॥ १३ ॥ भावकर्मभ्रमकरास्तादयः केचनाधुना । कथयन्ते कर्तरि वरः खलस्नेहो विलीयते ॥ १४ ॥ उत्पद्यते गुरौ स्नेहो रामोयं म्रियते वने । वाचसाजल्पते रामस्त्रायते भक्तमात्मनः ॥ १५ ॥ जायते रामचन्द्रस्य मुखकान्तिः प्रतीयते । सेवकं ब्रह्म

सन्यासो पठितुं शास्यते हि जनम् ॥ १६ ॥ रज्यते मे मती रामे धीयते खड्गमस्त्रधृक् । दीपः प्रकीर्यते रात्रौ खिद्यते विरही जनः ॥ १७ ॥ रामः प्रपूर्यते विश्वं कीर्त्या चैव विमृश्यते । शूरोयं शक्यते युद्धे रामोयं पीयते पयः ॥ १८ ॥ शास्त्रं वै बुध्यते रामः स चान्यं मन्यते गदं । रामो न तृप्यते हन्तुं दूयते विरहातुरः ॥ १९ ॥ ह्रयते चीयते चासौ लीयते पर्णवेश्मनि । डीयते भयतः पक्षी मतिरेषा प्रमीयते ॥ २० ॥ जानकी व्रियते रामं सविता दीप्यते वनं । प्रीयते रामचन्द्रोसौ प्रमोदो नात्र मीयते ॥ २१ ॥ चन्द्रः प्रदीप्यते रात्रौ समुद्रोस्मात्प्रपूर्यते । कौसल्या सूयते रामं काश्यां च म्रियते कृती ॥ २२ ॥ एतादृशानि रूपाणि भवेयुर्भावकर्मणोः । अन्यान्यपि यथा प्राप्तमूह्यतां स्वयमेव च ॥२३॥ प्रबोधचन्द्रिकायां च कृतौ वैजलभूपतेः॥ विभक्तिचन्द्रिकामध्ये समाप्ता त्यादिचन्द्रिका ॥२४॥

अथ षट्कारकाणीह कथ्यन्ते कथितान्यपि । यर्था यतो विभक्तीनां कारकत्वेन दर्शिताः ॥ २५ ॥ कर्ता कर्म च करणं सम्प्रदानं तथैव च । अपादानं तथाधारमिति षट् कारकाणि वै ॥ २६ ॥ स कर्ता यः क्रियां साक्षादुत्पादयति सर्वतः । तत्कर्म क्रियया यत्तु विषयी क्रियतेतराम् ॥ २७ ॥ क्रिया निष्पाद्यते येन करणं तदुदाहृतम् । संप्रदानं तदेव स्याद्यस्मै सम्यक्प्रदीयते ॥ २८ ॥ यदपादीयते नूनं तदपादानमुच्यते । यत्रैव धीयते सर्वं स एवाधार उच्यते ॥ २९ ॥ स्वतन्त्रहेतुकर्मोक्तानु-

कर्त्रेति पञ्चधा। उदाहरणएवैषां रूपमाविर्भविष्यति ॥३०॥ स्वतन्त्रकर्ता स भवेत् निरपेक्षः क्रियासु यः। यथा भजाम्यहं रामं भक्त्या रामः प्रसीदति ॥ ३१ ॥ स हेतुकर्ता भवति कुर्वंतं कारयेत्तु यः। यथा याति वनं रामः पिता तं प्रापयत्यदः॥३२॥ गतिबुद्ध्यशनार्थेषु शब्दकर्मस्वकर्मसु। अहेतौ यो भवेत्कर्ता स हेतौ कर्म जायते ॥ ३३ ॥ गमनार्थे यथा रामो वनं गच्छति धार्मिकः। रामं दशरथो राजा विपिनं गमयत्यमुम् ॥३४॥ नीवह्योर्गमनार्थेषु प्रतिषेधो भवेद्यथा। जानकीं नयति श्रीमानयोध्यां रघुनंदनः ॥ ३५ ॥ जनको नाययत्येतां सीता रामेण धीमता। एवं वहेरुदाहार्यमथ बुद्ध्यर्थधातुषु ॥ ३६ ॥ लक्ष्मणो बुध्यते कार्यं रामस्तं बोधयत्यदः। भक्षणार्थे यथा रामो भक्तं भुंक्ते क्षुधातुरः॥३७॥रामं भोजयति प्रीत्या सीता सघृतमोदनम्। भक्षणार्थे निषेधः स्यादादिखाद्योस्तु तद्यथा। रामोऽन्नमत्ति सीतान्नं रामेणादयतीप्सितं। एवं खादति रामोऽन्नं तेन खादयति प्रिया ॥ शब्दकर्मसु रामोऽसौ शास्त्रं पठति बुद्धिमान्। तं गुरुः पाठयत्येनां निषेधोह्वयतेर्यथा ॥ ४१ ॥ रावणं ह्वयति श्रीमान् रामस्तं रावणं रिपुम्। रामेणाह्वययत्येनं महाबलविभीषणः ॥ ४२ ॥ अकर्मसु यथा रामः शेते तं शाययत्यसौ। सीता निषेधः क्रंदेश्च तथा शब्दायतेरपि ॥ ४३ ॥ यथासौ क्रंदते रामः सीतया क्रंदयत्यसौ। रामचन्द्रस्य विरहे एवं शब्दायतेरपि ॥ ४४ ॥ हरतेश्च करोतेश्चाप्यभिवादिदृशोरपि।

विकल्पः कथितः प्राज्ञैस्तथोदाह्रियते मया ॥ पाथेयं रामचन्द्रस्य लक्ष्मणो हरति स्वयम्। हारयत्येष पाथेयं लक्ष्मणं लक्ष्मणेन च ॥ ४६ ॥ करोति लक्ष्मणः कार्यं रामः कारयति द्रुतम् । लक्ष्मणः कार्यमतुलं लक्ष्मणेनेति वा भवेत् ॥ ४७ ॥ अभिवादयते रामं गुरुं रामेण वा पिता । लंकां पश्यति रामोयं रामं दर्शयते कपिः ॥ ४८ ॥ लंकां रामेण वेत्त्येवसुदाहरणमूह्यताम् । उक्तादन्यत्र नास्त्येव हेतौ कानुष्ठ कर्मता ॥ ४९ ॥ पाचकाश्च पचंत्यन्नं पाचकैः पाचयत्यसौ । क्रंदयत्येष शूद्रेण दापयत्येष तेन वै ॥ ५० ॥ इत्येवमादि बोद्धव्यमनुक्तमपि बालकैः । कर्मकर्ता यथा राम ओदनः पच्यते स्वयम् ॥ ५१ ॥ उक्तकर्ता यथा रामो रावणं हन्ति सायकैः । अनुक्तकर्ता च यथा रामेण हन्यते रिपुः ॥ ५२ ॥ सर्वत्र चोक्ते प्रथमा तृतीयानुक्तकर्तरि । निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा भवेत् ॥ ५३ ॥ कर्म तत्तथा स्वयमोसितानीप्सितादिना । अनिवृत्तं हि यत्पूर्वं तन्निर्वर्त्यमुदाहृतम् ॥ ५४ ॥ यथा राम पटे तंतूंस्तुवास: करोम्यहम् । घटयामि सुवर्णेन रामचन्द्रस्य कुण्डले ॥ ५५ ॥ इत्यादि निर्वर्त्यमिदमनुक्तमपि पेष्यते । विकृतं क्रियते यत्तु तद्विकार्यमुदाहृतम् ॥५६॥ राम काष्ठं लुनात्येष कांडकारोतिकौतुकी । विशेषोऽनान्यतो यत्तु प्राप्यते प्राप्यमीप्सितम्॥ यथा स्मरामि राम च रामचन्द्रं नमाम्यहम्।कन्दर्पशरसंभूताला सीतां हरति रावणः॥ ५८ ॥ क्रोधाद्यः खादति विषमिति प्राप्य-

मनोऽभिप्सितम् । ईप्सितानीप्सितं प्राप्यं यथा बालाः क्षुधातुराः । भुंजते सरजस्कान्नं फलं धूलिमलीमसम् क्षणेन दुह्यते दुग्धं गौरेषा च पयस्विनी ॥ ६० ॥ इदं च कथितं प्राप्यमुक्तं चेत्यवगम्यताम् । जपयोगनिमित्तं चेत्तदेवाकथितं मतम् ॥ ६१ ॥ कर्तृकर्म यथा रामः सीतां कारयतीप्सितम् । करणं द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ॥ शरीरावयवं यत्तु तदाभ्यन्तरमुच्यते । तद्भिन्नं बाह्यमाख्यातं तयोर्बाह्यं निगद्यते ॥६३॥ रामो रावणमूर्धानं निकृन्तति शितैः शरैः । अयोध्यां दोलया याति जानक्या सह राघवः ॥ आभ्यन्तरं यथा रामं मानसेन भजाम्यहम् । सीता विलोकते रामं नयनांतेन सस्मितम् ॥ ६५ ॥ सानुरागकटाक्षेण रामः सीतां विलोकते । संप्रदानं त्रिधा प्रोक्तं प्रेरकं चानुमंत्रकम् ॥६६॥ अनिराकर्तृकं चेति तत्र प्रेरकमुच्यते। मुक्तिं भक्ताय रामोसौ ददाति करुणान्वितः ॥६७॥ मह्यं मुक्तिं प्रदेहीति प्रेरणात्प्रेरकं मतम् । अथानुमंत्रकं किंचिदुच्यते तापसो वने ॥ ६८ ॥ रामायातिथये दत्ते फलमूले यथाविधि । अप्रेरणात्प्रदत्तस्य चानुमंत्रणकर्मणा ॥ ६९ ॥ अनुमंत्रकं भवेदेतदनिराकर्तृकं यथा । पंचोपचारं रामाय भक्तलोकः प्रयच्छति॥७०॥अनिराकरणादेतदनिराकर्तृकं मतम् । अपादानं द्विधा प्रोक्तं चलं चाचलमेव च ॥ ७१ ॥ चलादपांगान्नारीणां निर्याति विषमं विषम् । अचलं च यथा वृक्षात्पत्रं रामे पतत्यधः ॥ ७२ ॥ हिमाद्रेरागता गंगा समुद्राद्रत्नमुत्थि-

तम् । व्यापकं च उपश्लेषो विषयं च समीपता ॥७३॥ चतुर्धा चाधिकरणं तत्राभिव्यापकं यथा । रामभक्तौ भवेन्मुक्तिः सीतायां च पतिव्रतम् ॥७४॥ तदौपश्लेषिकं रामः श्रीमान्सिंहासने स्थितः । स्थितं च वीक्षते भूयो वैदेही शयने स्थिता॥७५॥ अथ वैषयिकं रामोयोध्यायां वसति स्वयम् । विपिने वसति सिंहः शार्दूलो गिरिगह्वरे ॥ ७६ ॥ अथ सामीप्यकं रामः कपिसैन्यसमन्वितः।अवात्सीत्सागरे घोरे गङ्गायां वसति स्वयम् । स्वस्वामिजन्यजनकावंगांगी च तृतीयकः । स्थान्यादेशश्च विज्ञेयः संबंधोसौ चतुर्विधः ॥ साधोर्धनं पितुः पुत्रो पशोः पादौ ब्रुवो वचिः । उदाहृतिश्चतुर्धेयं कविभिः परिपठ्यते ॥ ननु संबधस्य किन्न कारकत्वमिहोच्यते । कारकं हि क्रियाहेतुः संबधस्याप्रधानता ॥८०॥ साक्षात् क्रियाभिः संबद्धं कारकं हि विदुर्बुधाः । स्वातन्त्र्यस्य विवक्षायां स्थालीं पचति सेवकः॥८१॥ पाचकः पचतीत्यादौ यथा स्वातंत्र्यतो भवेत् । न तथा क्वापि संबंधे यथा रामस्य सेवकः॥८२॥ प्रयोगचन्द्रिकायां च कर्तौ वैजलभूपतिः । समाप्ता सकलश्लाघ्या वरा कारकचन्द्रिका ॥८३॥

त्यादिभिस्तद्धितैः कृद्भिः समासैश्च विधीयते । यदेव कारकं तत्र प्रथमैव न चान्यतः ॥८४॥ उक्तानां हि पदार्थानां त्याद्यैः संख्यैव गृह्यते । कृत्तद्धितसमासैश्च लिङ्गसंख्याविभक्तयः ॥८५॥ यथा रहसि रामेण सानुरागेण सादरम्। प्रीयन्ते प्रेयसीवाचः सुधारससहोदराः ॥ ८६ ॥रिपून् जयति रामोथरामे वीनी

यते रिपुः । सीतामुखेन जीयेते पूर्णेन्दुविकचांबुजे ॥ ८७॥
रामोसौ कारकः सीता कारिका कारकं कुलम् । अत्र कृत्क-
र्तरीत्येव लिङ्गादि भजतेतराम् ॥ ८८ ॥ रामस्य वैयाकरणः
सा वैयाकरणी वधूः । तद्वैयाकरणं सैन्यमित्थं भवति तद्धितः
॥ ८९ ॥ कृतप्रणामो रामोयं कृतप्रणामं तत्कुलम् । सीता
कृतप्रणामाया समासः कारके कृतः ॥९०॥ प्रकृतिर्विकृतिश्चा-
पि स्याद्युक्ता चेद्यदा तदा । वाचकैः प्रकृतेः संख्या गृह्यते
विकृतिर्नहि ॥९१॥जायन्ते तंतवो रामपटः स्वर्णानि कुण्डले ।
क्रीयन्ते रामचन्द्रस्य पच्यन्तेन्नं च तन्दुलाः ॥ ९२ ॥ तन्तवो
रामचन्द्रस्य पटीभूतास्च तन्दुलाः॥ कृताः स्वोदनमित्यादौ
लिङ्गादिकमपोह्यते ॥ ९३ ॥ प्रधाने कर्मणि भवेद्वाचकोपि
द्विकर्मणाम् । अप्रधाने दुहादीनां ह्रेतौ कर्तुश्च कर्मणि ॥९४॥
अयोध्यांनीयते सीता रामेण गुरुकर्मणा । रामोयं याच्यते
मुक्तिं मया संसारभीरुणा ॥ ९५ ॥ रामोयं याप्यते पित्रा
वनं रागवशात्मना । गुरुणा भाष्यते शिष्यः शास्त्रं वा भोज्यते
पयः॥९६॥ अवच्छेद्यं विशेष्यं स्यादवच्छेदकमुत्तमम् । तद्विशे-
षणमाख्यातं रामो दाशरथिर्यथा ॥ ९७ ॥ विशेष्यस्य हि य-
ल्लिङ्गं विभक्तिवचने च ये । तानि कार्याणि योज्यानि विशेष-
णपदेष्वपि ॥ ९८ ॥ यथा दाशरथी रामो मां रक्षतु समंततः ॥
कौसल्यानन्दनं वंदे रामचन्द्रं कृपार्णवम् ॥ ९९ ॥ शरेण च
रामेण दुर्जयो रावणो जितः । जनकेन सुता दत्ता रामाय

बलशालिने ॥ २०० ॥ रामाद्दिष्टतकोदण्डाद्बिभेति युधि राव-
णः । रामस्य रावणानीककालस्य युधि विक्रमः ॥ १ ॥ रामे वि-
हरति स्फीता विजयश्रीरहर्निशम् । जानकीवदनांभोजमधु-
पानमधुव्रते ॥ २ ॥ यत्राद्यस्य विधेयत्वं तत्रायं नियमो न-
हि । स्यादुत्तदजहल्लिङ्गमजहद्वचनं च यत् ॥३॥ रामभक्तिः प्र-
माणं स्यात्करुणाभाजनं हरिः । मुक्तिक्षेत्रमियं काशी ह्यजह-
ल्लिङ्गमीदृशम् ॥ ४ ॥ रामदाराश्च सीतेयं स्त्रियोप्यप्सरसः खलु ।
रामभक्तिर्मुक्तिगृहा अजहद्वचनं त्विदम् ॥ ५ ॥ बहुव्रीहिसमासे
हि स्वलिंगानि हरन्त्यमी । सर्वशब्दविशेष्यस्य लिङ्गादिकमुपा-
सते ॥ ६ ॥ अंगीकृतप्रणामोयं रामोऽभीप्सितदायकः ।
अनादृताप्सराः सेयमित्याद्यमवगम्यते ॥ ७ ॥ उपमानोपमे-
यत्वं स्याद्भेदे लिङ्गसंख्ययोः । अभिन्नैव विभक्तिः स्यादुपमा-
नोपमेययोः ॥ ८ ॥ लिङ्गभेदे यथा रामपत्नी मन्दगतिः परम् ।
मत्तमातंगइव सा मंजुवाक् परपुष्टवत् ॥ ९ ॥ यथा वचन-
भेदेन कन्दर्प इव सुन्दराः । यूयं युवानो रामस्य भक्ता अहमि-
वोत्तमाः ॥ १० ॥ त्वां राममिव पश्यामि रामेणेव त्वया जि-
ताः । दुर्जयाः शत्रवः सर्वे रामायेव नमोस्तु ते ॥ ११ ॥ त्वत्तोरा
मादिवाशेषा रणे बिभ्यति शत्रवः । एवं लिङ्गत्रयेपि स्याद्वचन-
त्रितयेपि च ॥ १२ ॥ विंशत्याद्याः सदैकत्वे संख्याः संख्येयसं-
ख्ययोः । संख्यायन्ते यदा संख्यास्तदा द्वित्वादिकं भवेत् ॥१३॥
विंशती रामभक्ताः स्युर्विंशती रामभक्तयः । सहस्रं रामभक्ताः

स्युः शतं रामस्य भक्तयः ॥ १४ ॥ लक्षं च रामभक्ताः स्युः कोटी
रामस्य भक्तयः । संख्यायन्ते यदा द्विवास्तद्द्विवादिकं भवेत्
॥१५॥ यथा विंशतयस्तिस्रो रामभक्ताः शतानि च । चत्वारि
भक्तयस्तिस्रस्तिस्रः सैन्यानि कोटयः॥१६॥समुच्चयेन वाक्यं चेद्ब-
हूनां वा द्वयोश्च वा । अङ्गं च या श्रिता संख्या वाचकानां
विकल्पतः ॥ रामचन्द्रश्च सीता च वनं गच्छति गच्छतः ।
रामश्च लक्ष्मणश्चापि भरतश्च प्रयाति च ॥ १८ ॥ प्रयांति वा
पुरीं स्वीयां जेता जेतार एव वा । तेजस्विनस्तेजस्वी च गुणी
गुणिन एव वा ॥ १९ ॥ पुरुषेषु च मे वेद्यः स एव पुरुषः परः।
समुच्चये स एव स्यात्संख्या वापि तदाश्रिता ॥ २० ॥ यथा
रामश्च सीते त्वं गच्छयो विपिनं वनम् । रामस्त्वमहमप्याशु
गच्छावो गुरुशासनात् ॥२१॥ अहं च त्वं च रामश्च गच्छेयु-
र्निर्जनं वनम् । प्रथमादिक्रमादेव प्रतीपोच्चारितेपि च ॥२२॥
मुख्यो गौणो लाक्षणिकः प्रयोगस्त्रिविधो भवेत् । मुख्यः स्वा-
र्थेन संपन्नो यथा त्वं न रघूद्वहः ॥ २३ ॥ गुणयोगाद्भवेद्गौणो
रामक्रोधो विषं महत् । रावणं प्रति यो रामः सिंहश्च करिणं
प्रति ॥ २४ ॥ स्वार्थान्वयानां बोधे तु तात्पर्यस्यानुरोधतः । ल-
क्षणा कल्पते सापि द्विविधा स्यात्प्रयोगतः ॥२५॥ जहत्स्वार्था
ऽजहत्स्वार्था तत्राद्या कथ्यते मया । स्वार्थत्यागो भवेद्यत्र ज-
हत्स्वार्थेति सा यथा ॥२६॥ रामो वसति पाथोधौ यमुनायां
जनार्दनः।यष्टीर्भोजय खट्वाश्च खट्वा वदति संसदि ॥२७॥ अत्र

स्वार्थापरित्यागो ऽजहत्स्वार्था च सा यथा। छत्रिणो यान्त्यमी काशीं काकेभ्यो दधि रक्ष्यताम्॥२८॥पदार्थेष्वपदार्थेपि तात्पर्याल्लक्षणान्वयः। एवं सर्वत्र बोद्धव्यमनुक्तमपि बालकैः॥ २९॥ जातिव्यक्तिपरत्वेन द्विधा शब्दप्रवर्तनम्। तत्र जातिपरत्वेन यथा त्वं भोजयातिथिम्॥ ३०॥ अत्रैकत्वमतंत्रं स्याद्भोजनेनातियोगिता। ब्राह्मणान्भोजयेत्युक्ते श्रोता त्रीन्भोजयत्यसौ॥ ॥३१॥जात्या भोजयितुं नैव शक्नोमीत्यवधार्य सः। त्रीनेव भोजयत्याशु तात्पर्यानवधारणे॥३२॥तात्पर्यविषये शब्दः प्रमाणमितिनिश्चितः। श्रोता तदनुसारेण शाब्दबोधे प्रवर्तते॥ ३३॥ विशेष्यं क्रियया यत्स्यादुक्तं कर्मादिकं पुनः। विशेषणक्रियां प्राह तदेवेति विनिश्चितम्॥३४॥यथा भुक्त्वा वनं रामः प्रयाति सह भार्यया। रामेण गम्यतेऽयोध्या वनाद्भुक्त्वा फलानि च॥३५॥उक्तमेवोक्ततां याति क्वचिदुक्तमनुक्तताम्। अनुक्तमपि चोक्तं स्यात् क्वचिदेव पदांतरैः॥ ३६॥ ओदनं पच्यते दृष्टो मया सत्पुरुषोप्ययम्। आरूढवानरो वृक्षो विद्यते दृश्यतेपि वा॥ ३७॥ पटोयं शतिको भाति रामेण परिधीयते। कृदादिभ्यो यदेवोक्तं त्याद्यैरपि तदेव हि॥ ३८॥ नृत्यंतं वानरं रामो विलोकयति कौतुकी। छात्रं च वैयाकरणं शब्दान्पृच्छति लक्ष्मणः॥ ३९॥ आरूढवानरं वृक्षं रामः पश्यति सादरम्। कृदादिनोक्तमेवैतदनुक्तं त्यादिना भवेत्॥ ४०॥ नृत्यते गीयते रामो नटेन स्तूयते क्वचित्। भोक्तुं पचति रामोयमो-

दनं त्वुदस्रंगत: ॥ ४१ ॥ रामभक्तः समानीय रामं पूजयति स्वयम् । इत्याद्यनुक्तमेव स्यादनुक्तमपि बुध्यते ॥ ४२ ॥ कर्मज-प्रत्ययेनान्यक्क चिदप्युच्यते यथा । कृष्णेन दुह्यते गोश्च गोभ्यो गोष्वथवा पय: ॥ मया प्रयाच्यते मुक्तीरामाद्रामस्य रामके । याच्यते रामचन्द्रेण यावकेनोदनोऽद्भुत: ॥ ४४ ॥ क्क चित्कालादिकं चैव सत्वं चान्यस्य कर्मण: । रामेण श्रूयते धर्मो मासं गीतं च गीयते ॥ ४५ ॥ कांतेन गम्यते कोशं का-न्तया स्निग्धचेतसा । अन्यस्य कर्मणो ऽसत्वे कालाद्यप्याह क-र्मज: ॥ ४६ ॥ कुंभकर्णेन सुप्यन्ते षण्मासा रामभूभुजा । वने द्वादशवर्षाणि स्थीयन्ते गुरुशासनात् ॥ ४७ ॥ प्रबोधच-न्द्रिकायां च कृतौ वैजलभूपते: । इत्युक्तचंद्रिका सम्यक्समाप्ता सुमनोहरा ॥ ४८ ॥

समास: षड्विधो नाम्ना ज्ञेयस्तत्पुरुषस्तथा । कर्मधा-रयसंज्ञश्च बहुव्रीहिस्तथैव च ॥ ४९ ॥ द्विगुर्द्वंद्वोव्ययीभाव: प्राधान्यं तु चतुर्विधम् । पूर्वोत्तरोभयान्येषां पदार्थानां विकल्प-नात् ॥ तत्पुरुषो द्विप्रधानस्तत्र पूर्वप्रधानके । प्रधानत्वं यथा पूर्वकायस्यापरकायवत् ॥ ५१ ॥ अथोत्तरपदार्थस्य प्राधान्ये रामसेवक: । द्विप्रधानस्तथा कर्मधारयोपि भवेद्यथा ॥ ५२ ॥ राम: पुरुषसिंहोयं पूर्वप्राधान्यमीदृशम् । नीलोत्पलमिवास्या-त्विइत्युत्तरपदार्थता ॥५३॥ द्विप्राधान्यं बहुव्रीहेरन्यत्र चोभयत्र च । तत्रान्यत्र पदार्थे यत्प्राधान्यं तन्निगद्यते ॥ ५४ ॥ स्मृत-

रामोहमनिशमुभयत्र पदार्थके । प्रधानता यथा द्विचाः पंचषः सप्तषास्तथा ॥ ५५ ॥ उभयत्र पदार्थे च द्वंद्वे प्राधान्यमिष्यते । गुरोरादेशतो रामलक्ष्मणौ वनगामिनौ ॥ ५५ ॥ त्रिप्रधानोव्ययीभावः पूर्वस्मिंश्च पदार्थके । उत्तरस्मिंस्तथान्यस्मिन्प्राधान्यमिह सर्वतः ॥ ५७ ॥ यथोपरामं तिष्ठामि लक्ष्मणस्येदृशं वचः । उत्तरत्र यथा नैव संसारेत्र सुखप्रति ॥ ५८ ॥ अन्यत्र च यथोन्मत्तगङ्गदेशोतिशोभनः । एषामिति प्रकारेण प्राधान्यं कथितं मया ॥ ५९ ॥ समासानां पुनश्चैषां चातुर्विध्यं निगद्यते । स्यान्नित्यत्वमनित्यत्वं लुकत्वं चालुकत्वमेव च ॥६०॥ तत्र नित्यसमासोयं कुम्भकारोस्तलावकः । अनित्यो राजपुरुषो राज्ञः पुरुष एव च॥६१॥लुकसमासो यथा रामश्रितः पुरुषपुंगवः । अलुक्समासश्च यथा कंठेकालो महेश्वरः॥६२॥अथैषां च समासानां भेदः प्रत्येकमुच्यते । तत्राष्टधा तत्पुरुषो विभक्तेश्च प्रभेदतः ॥ ६३ ॥ स्यात्प्रथमातत्पुरुषः पूर्वकायो ऽधरांगकः । स्याद्द्वितीयातत्पुरुषो धन्यो रामश्रितः पुमान् ॥ ६४ ॥ स्यात्तृतीयातत्पुरुषो यथा धान्यार्थ इष्यते। स्याच्चतुर्थीतत्पुरुषो यूपदारु विराजते ॥ ६५ ॥ स्यात् पञ्चमीतत्पुरुषो न मे शत्रुभयं क्व चित् । भवेत् षष्ठीतत्पुरुषो रामभक्तो भवाम्यहम् ॥ ६६ ॥ स्यात्सप्तमीतत्पुरुषो भक्तशौंडो मुरद्विषः॥स्यान्नञ्तत्पुरुषो ह्येष यथानेको हरिप्रियः ॥ ६७ ॥ कर्मधारय एवं स्यात्सप्तधा स निगद्यते । विशेषणं पूर्वपदे यथानोलोत्पलं वरम् ॥ ६८ ॥

विशेषणोत्तरपदो यथा शाब्दिकसूचिकः । विशेषणोभयपदो यथा शीतोष्णमद्भुतम् ॥६९॥ उपमानपूर्वपदो रामशूरस्सु रोत्तमः । उपमानोत्तरो रामचन्द्रः पुरुषकेसरी ॥ ७० ॥ संभावनापूर्वपदो रामशूरो भवाम्यहम् । अवधारणापूर्वपदो यथा रामधनं मम ॥ ७१ ॥ सप्तधा स्याद्बहुव्रीहिर्द्विपदस्तत्र कथ्यते । प्रथमार्थं विहायासौ भवेत् षट्सु विभक्तिषु ॥ ७२ ॥ रामोनुरक्तरामोहं चिरं शोचितराघवः । उपनीतबली रामो ह्यहं विगतकल्मषः ॥ ७३ ॥ कृतप्रणामो रामो यमित्यादि द्विपदो भवेत् । अथो बहुपदः कश्चिद्बहुव्रीहिर्निगद्यते ॥ ७४ ॥ पराक्रमार्जितयशा रामचन्द्रो महीपतिः । सुग्रीवकृतसेवोसौ विक्रमाहतरावणः ॥ ७५ ॥ संख्योत्तरपदो रामे बहुव्रीहिर्निगद्यते । उपविंशोप्युपदशो राममेव स्मराम्यहम् ॥ ७६ ॥ संख्योभयपदोप्येवं द्वित्रा रामानुवर्तिनः । सहपूर्वपदश्चायं सानंदो रघुनन्दनः ॥ ७७ ॥ व्यतीहारस्वभावश्च यथा युद्धं न संमतम् । केशाकेशि सतां नापि दण्डादण्डि समीरितम् ॥७८॥ दिगन्तरालविषयो यथा दिक्पूर्वदक्षिणा । इयमुत्तरपूर्वा स्यादियं दक्षिणपश्चिमा ॥ ७९ ॥ द्विगुर्द्विधैकवद्भावी नैकवद्भावितान्वितः । आद्यो यथा पञ्चपूली त्रिशृंगी च क्रतुत्रयी ॥ ८० ॥ यथा चानेकवद्भावी त्रिलोकाश्च चतुर्दश । अथ द्वंद्वसमासश्च चतुर्धा स निगद्यते ॥ ८१ ॥ समुच्चयान्वाचययोः समासो नैव सिध्यति । इतरेतरयोगोयं यथैतौ रामलक्ष्मणौ ॥ ८२ ॥ राम-

लक्ष्मणाग्रनुप्ना जयन्ति रिपुमण्डलीम् । समाहारो यथा शंखपटहं शोभतेधुना ॥८३॥ भेरीमृदङ्गमनिशं शब्दं जनयति स्फुटम्। द्विधा स्यादव्ययोभावो नामपूर्वपदो यथा ॥ ८४ ॥ न सुखप्रति संसारे न सुखप्रति मे गृहे । स्यादव्ययपूर्वपदो यथा स्यादुपतोरणम् ॥ ८५ ॥ अहर्निशं मे मनसि तिष्ठत्यतिसुखान्वितम् ॥ ८६ ॥ प्रबोधचन्द्रिकायां च कृतौ वैजलभूपतेः । समासचन्द्रिका ह्येषा समाप्ता स्वप्रकाशिनी ॥ ८७ ॥

तद्धितास्त्रिविधा ज्ञेयाः केचित्सामान्यवृत्तयः । केचिदव्ययसंज्ञाश्च केचिद्भावार्थवाचकाः ॥ ८८ ॥ सामान्यवृत्तयस्तत्र कथ्यन्ते केचनाधुना । तदस्यास्तीति गुणवान् रामो गुणवती प्रिया॥८९॥ गुणवद्राघवकुलमेवं सर्वत्र बुध्यताम् । चूडालो रामचन्द्रोसौ चूडाला रामवल्लभा ॥ ९० ॥ पामनो लोमशः सीता लोमशा लोमशं कुलम्।पिच्छिला पदवी प्राज्ञो रामः प्राज्ञी च तद्वधूः ॥९१॥प्राज्ञं रामकुलं श्राद्ध आर्चोवार्तो रघूद्वहः । समोसौ दंतुरः सीता मधुरं रामभाषितम्॥९२॥सुषिरं जलपात्रं स्यान्मुष्करोसमभक्तिभाक्। केशवो रामचन्द्रोयंकेशवा रामवल्लभा॥९३॥मणिवो रामभक्तोयं सीतेयं च हिरण्यवा । रजस्वलाकृषीवलामलिनामलीमस ।॥९४॥ धनी रामश्च धनिनी सीता च धनि मे कुलम्।धनिको रामचन्द्रः स्त्री धनिका धनिकं कुलम्॥९५॥यशस्वी रामचन्द्रो ऽयं जानकी च यशस्विनी । मायावी रावणो रामो मेधावी स्त्रग्वितत्कुलम् ॥९६॥ मेष ऊर्णायुरेष स्याद्वाग्मी रामस्तु

रावण: । वाचालोप्यतिवाचाटो वाचाटी तद्वधूरियम् ॥ ९७ ॥
फलिनो वृक्ष एषोत्र फलिना रामवाटिका । बर्हिणोयं मयूर:
स्याद्बर्हिणं तत्कुलं वरम् ॥ ९८ ॥ शृंगारको वृषश्चैव धेनु:
शृंगारिका तथा । शीतालु: पुरुष: स्त्री च शीतालु कुलमुत्तमम्
॥ ९९ ॥ एवं वातूलमनिशंवातूलश्च न सह्यते । तदस्यापत्य-
मित्यर्थे वासिष्ठो भार्गवोमुनि: ॥ ३०० ॥ वासिष्ठी भार्गवी
कन्या वासिष्ठं भार्गवं कुलम् । निवासार्थे जानपद: पांचालो
माथुरस्तथा ॥ १ ॥ अपत्यार्थे दाशरथिर्मारुती रावणिस्तथा ।
नाडायना आश्वलायना गार्ग्यो वात्स्यायनास्तथा ॥ २॥ वैनते-
यश्चगौधेय: स्त्रीभ्य इत्यादयस्तथा । चाटकैरश्च गौधारो गौधेर:
क्षत्रियस्तथा ॥३॥ कौरव्य इत्यादि भवेद्भावार्थस्तत्र कथ्यते । मू-
र्धन्य: कंण्ठ्य ओष्ठ्यश्च तालव्यादिरपिस्मृत:॥४॥दुर्गंधिश्च सुग-
न्धिश्चपूतगन्धिस्तथैव च । अथ येषामतिशयेनेत्यर्थे कथ्यतेधुना
॥ ५ ॥ पटिष्ठश्च पटीयांश्च राम: सीता गरीयसी । गरिष्ठश्च
गरीयांश्च प्रेष्ठ: प्रेयांस्तथैव च ॥ ६ ॥ अयं पटुतरो रामस्तथा
पटुतमोप्यथ । पटुकल्प: पटुदेश्य: पटुदेशीय इत्यपि ॥ ७ ॥
असमाप्तौ भवेदेवं प्रकारवचने तथा । पटुजातीय मृदुजा
तीयइत्यादिकं भवेत् ॥ ८ ॥ प्रमाणे जानुदघ्नं च जानुद्वयस-
मित्यपि । जानुमात्रं जलमिदं जानुदघ्नी नदी त्वियम् ॥ ९ ॥
तत्र नियुक्तइत्यर्थे रामदौवारिको जन: । दौवारिकी वरतनु-
र्दौवारिकमिदं कुलम् ॥ १० ॥ तेन दीव्यति तेनापि जयतीत्य-

थंगोचरे । आत्मिकादिर्भवेत्साधुः संस्कृते दाधिकं भवेत् ॥११॥ सामान्यवृत्तय इमे कथ्यन्ते ऽव्ययसंज्ञकाः । यतः प्रभृति रामोयं सेवितश्च त्वया मया ॥ १२ ॥ ततः प्रभृति कालस्य भीतिर्नियतमेव नो । यत्र रामस्य सेवा स्यात्तत्र मंगलमिष्यते ॥ १३ ॥ अधुना सेव्यते राम इदानीं सर्वदा सदा । एतर्हि सर्वथा रामः सेव्य इत्थं कथं पुनः ॥१४ ॥ पुरस्तात्सेव्यते रामः स च एवाथ धार्मिकैः । पूर्वेद्युः सेव्यते रामश्चान्येद्युः सेव्यते मया ॥ १५ ॥ एषमस्य परुच्चैव परारि च निषेवितः । उत्तराद्दक्षिणाच्चैव पश्चादुपरि च स्थितः॥ १६ ॥ उपरिष्टाच्च पूर्वेण दक्षिणा दक्षिणाहि च । द्विधा द्वैधं त्रिधा त्रैधं नितरां सुतरां तथा ॥ १७ ॥ अव्ययाः कथिता एते कथ्यन्ते भाववाचकाः । पटुत्वं पटुता रामे गरिमा दृश्यते महान् ॥ १८ शौर्यं धैर्यं च गांभीर्यं सौभाग्यं रामभूभुजि । स्तेयं च रावणे सख्यं कापेयं कपियूथपे ॥ १९ ॥ प्राजापत्यमाश्वपत्यं पौरोहित्यादयस्तथा । आश्वमौष्ट्रं च कौमारं कैशोरं यौवनं तथा ॥ २० ॥ द्विहायनं च मौनं च स्थाविरं मार्दवं तथा । स्थाद्यौग्यकं बाहुलकं रामणीयकमेव च ॥ २१ ॥ आचार्यकादयः प्रोक्ता भाषितास्तद्धिता इति ॥ प्रयोगचन्द्रिकायां च कृतौ वैजलभूपतेः ॥ २१ ॥ समाप्ता सकलश्लाघ्या वरा तद्धितचन्द्रिका ॥

कृतस्त्रिष्वपि वर्तन्ते भावे कर्मणि कर्तरि ॥ २२ ॥ तत्र भावे यथा रामे विजयो विनयः

सदा। न दरो न परो रामे विग्रहो न च निग्रहः ॥ २४॥ आदराद्यास्तथा भोगो योगस्त्यागादयस्तथा । पचनं हरणं ध्यानमवनं हरणादयः ॥ २५॥ भुक्तिर्मुक्तिः कृतिश्चैव गीतिरीत्यादयस्तथा । पारणावेदनेत्यादिचिकीर्षाद्येति च स्त्रियाम् ॥ २६॥ जिगीषा रामचन्द्रेषु बुभुक्षा बालके तथा । छिदा भिदा विदा चैव जराप्रभृतयस्त्रियाम् ॥ २७॥ अथ कर्मणि भावे च वर्तन्ते के च नाधुना। सकर्मकात् कर्मणि च तीर्णो रामेण सागरः ॥ २८॥ निर्जितो रावणो वैरी सीतानीतापुरीं निजाम्। भावे यथा ऽकर्मकेभ्यः स्थितं रामेण कानने ॥ सुप्तं भूमौ निशि सदा रमितं तेन सीतया । अयोध्यां च गतो रामः कर्तरीत्यादि गम्यताम् ॥ ३०॥ तव्यादयः कर्मणि च भावे च निवसन्त्यमी। तत्र कर्तरि वा षष्ठी दृश्यते तदुदाहृतिः ॥ ३१॥ लंका रामेण गन्तव्या रामस्य च महीपतेः। गन्तव्यं रामचन्द्रेण स्थातव्यं च मयात्र हि ॥ ३२॥ दर्शनीया च मे सीता रामस्य च कृशा वधूः । ध्येयं रामपदाम्भोजं मया मम च सर्वदा ॥ ३३॥ रामनामामृतं पेयं ज्ञेये च गुणकर्मणी। रामस्तुत्यो मया नित्यं मम वा पुण्यकर्मसु॥३४॥ रामसेवा मया कार्या मम वा पुण्यकर्मणः । ईषत्करा मया रामभक्तिः स्याद् दुष्करा परैः ॥ ३५॥ रामस्यानुग्रहः स्वर्गः सुप्रापो नात्र संशयः । सुपीतं भक्तिभावेन रामनामामृतं मया ॥ ३६॥ त्रिषु गत्यर्थकादिभ्यः क्तो भवेदादि कर्मणि ।

वनं गतं च रामेण रामचन्द्रेण वा गतम् ॥ ३७॥ गतो वनं रामचंद्र एवं गत्यर्थधातुषु ॥ अकर्मकेषु च तथा ग्रीष्मे शुष्को ह्रदोधुना ॥ ३८ ॥ शुष्कोयं ह्रदः सूर्येण तथा शुष्कं ह्रदेनच । आश्लिष्टा रामचन्द्रेण सानुरागेण जानकी ॥ ३९ ॥ आश्लिष्टो रामचन्द्रोसौ रामेणाश्लिष्टमित्यपि ॥ सीतया चोपशयितो रामः परमधार्मिकः ॥ ४० ॥ रामेण चोपशयितं स चोपशयितः कृती । उपस्थितो गुरुं रामो रामेणोपस्थितो गुरुः ॥ ४१ ॥ रामेणोपस्थितं चैवमनुक्तमपि बुध्यताम् ॥ रामेणोपासितं नित्यं रामश्चोपासितो गुरुम् ॥ ४२ ॥ रामेण गुरुभक्तेन चिरं गुरुरुपासितः । वनमध्युषितो रामो रामेणाध्युषितं वनम् ॥ ४३ ॥ रामेणाध्युषितञ्चैवं भावे बोद्धव्यमुत्तमम् । उपजातः सुतः पित्रा चोपजातः सुतं पिता ॥४४॥ उपजातं च पित्रेति सर्वत्रोपरि बुध्यताम् । वानरो वृक्षमारूढ आरूढं वानरैस्तथा ॥ ४५ ॥ आरूढो वानरेणासौ रसालः फलसंयुतः । सीतानुजीर्णा रामेण सोनुजीर्णः प्रियां सतीम् ॥४६॥ अनुजीर्णं च रामेण त्रिषु रूपमिदं भवेत्। क्तोधिकरणे च भवेत् प्रभुक्तं रामभूभुजः ॥ ४७ ॥ प्रभुक्त ओदनस्तेन भुजेः क्तोनतु कर्तरि। कर्मण्यकर्मकान्नस्यात् किं तु स्यात् कर्तृभावयोः॥४८॥ शुष्का नदी च शरदि शुष्कं मद्येत्युदाहृतम् । अथ कर्तरि कथ्यन्ते क्तवतः केचन संप्रति ॥ ४९ ॥ निराकरिष्णुः सकलं वैरिणं रामभूपतिः । हतवान् रावणं रामः हतवान् कर्म दुष्क-

रम् ॥ ५० ॥ देवकार्यार्थि कर्तासौ रामचन्द्रो गुणाद्भुतः। रामकृत्यविदत्यर्थमरिभिः क्रीडति स्वयम् ॥ ५१ ॥ रामकीर्तिः प्रसृमरा रामोयं शत्रुघस्मरः। नत्वाकश्च वराकश्च रामभीत्याह रावणः ॥ ५२ ॥ त्रैलोक्यवन्दनो रामः करग्राही समुद्रतः। रामानन्दो महान् जातो रामो जिगमिषुर्वनम् ॥ ५३ ॥ यशोभिलाषुको रामो रावणं घातुकः परम्। पुण्यकारोपि सुहृदां पापकारो भवद्विषाम् ॥ ५४ ॥ सीतामुखाब्जमधुपो रामोभीष्टप्रदो भुवि। रामाज्ञया वनचरः कपिर्लंकाचरोभवत् ॥ ५५ ॥ तुमन्तस्थपो भावएव यथा भोक्तुं व्रजत्यसौ। भुक्त्वा व्रजामि नगरं भोक्तुं गच्छामि मन्दिरम् ॥ ५६ ॥ विहाय राज्यं रामेण गम्यते वनमद्भुतम्। रामोयं स वनं याति हसन्त्या सीतया सह ॥ ५७ ॥ गुरुणादिश्यमानेन रामेण गम्यते पुरी। सीतां विलोकयामास रामो नाभ्येतिपीडनम् ॥ ५८ ॥ इत्यादिकृति बोद्धव्यमन्यदुक्तानुसारतः।

प्रबोधचन्द्रिकायां च कृतौ वैजलभूपतेः ॥ ५९ ॥ कृदन्तचन्द्रिका सेयं बालकाभीष्टसाधिनी ॥

अथ बालप्रबोधार्थं सम्यक् सन्धिर्विविच्यते ॥ ६० ॥ रामच्छत्रं हरिच्छाया विष्णुच्छत्र गुरुच्छविः। रामो म्लेच्छात्समाच्छिद्य सीता च्छायामपीच्छति ॥ ६१ ॥ अचःपरच्छकारस्य द्वित्वमित्यवधार्यताम्। अथ प्रयत्नेन मया स्वरसन्धिर्विविच्यते ॥ ६२ ॥ रामवार्यस्ति शिशिरं जानक्येषा पतिव्रता। मध्वा-

नन्दो मात्राकाङ्क्षी चेतीत्यादौ यणा कृतम् ॥ ६३ ॥ यरो द्वित्वं यथा पक्षे दद्ध्यास्ते मद्ध्वनुत्तमम् । जानक्येषा मात्राकाङ्क्षी पक्षे प्रकृतिस्त्रयथा ॥ ६४ ॥ दधि आस्ते मधु अलं मधु आनन्द ईदृशः । मात्राकाङ्क्षी चेतिआदि मात्र इत्यादिकं भवेत् ॥ यणो मयो द्वे भवत इति पक्षे निगद्यते । दध्ध्यास्ते राम मध्ध्वत्र जानक्ययेति सांप्रतम् ॥ ६६ ॥ मध्ध्वानन्दो मात्राकाङ्क्षी इति पक्षे चतुष्टयम् । चयनं पवनं चैव चायकः पावकस्तथा ॥ ६७ ॥ तवेयं राम सीतोढा तवोदकमपि स्थितम् । तवाब्धिरस्ति सीताढ्या रामाकारो विराजते ॥ ६८ ॥ तवैषा राम सीतैव बत राम तवौदनम् । सीतौहतेत्यादिकेषु वृद्धिर्भवति निश्चितम् ॥ ६९ ॥ रामाग्रतश्च सीतास्ते दधीदं जानकीहते । मधूत्तमं वधूत्कृष्टा सेवारामपितृद्धिकृत् ॥७०॥ मातृकारकइत्यादौ सवर्णे दीर्घ इष्यते । एङो हरेव दासोयमिति विष्णो ऽवमां प्रति ॥ ७१ ॥ इत्यादावति स र्वत्र पदांते पूर्वरूपकम् । य एते च विष्ण इह इत्यादौ लोपइष्यते ॥ ७२ ॥ विकल्पे न मयेते च भवेद्विष्णविहेत्यपि । ईषदर्थे कुशब्दस्य कादेशे कोष्णमिष्यते । कदादेशे कदुष्णं च कवादेशे कवोष्णवत् । गोशब्दस्यावङिन्द्रे स्याद्गवेंद्र इति इष्यते ॥ ७४ ॥ गवाश्वं च गवोष्ट्रं च गवोदनमिति त्रयम् । केचिद्गवश्वं गवुष्ट्रम् गवोदनमिदं विदुः ॥ ७५ ॥ प्रौढः प्रौढिस्तथा प्रोढं प्रैष्यस्तु खलु वृद्धिभाक् । प्रार्णं च कम्बलार्णं च वसनार्णं तथैव च॥७६॥ ऋणार्णं च दशार्णं च

तथा वत्सतरार्णकम् । अक्षौहिणीरामसेना सुखार्तश्च जनो भवेत् । स्वैरे स्वैरिणि वृद्धिः स्यात् स्वरसन्धिरुदाहृतः ॥ ७८ ॥ अथ प्रकृतिवद्भावः कथ्यते तु मयाधुना । भो लक्ष्मण उपेहीति सीते आगच्छ सत्वरम् ॥ ७१ ॥ रामाक्षिणी इमे रामबाहू उत्तमशोभिनौ । रामनेत्रे इमे रम्ये राजीवे इव राजिते ॥ ८० ॥ मणीव दम्पतीवेति निषेधः कस्य चिन्मतो। इवार्थे च वकारोयऽमिति वा कस्य चिन्मतम् ॥८१॥ अमी अत्रे ति नो सन्धिर्बहुत्वेऽमोनिगद्यते । अ अवेहि इ इन्द्रेति उ उत्तिष्ठादिकेषु च॥८२॥ एकस्वरे निपाते च न सन्धिरिति बुध्यताम्॥अहो अहं नो अहं च निपातो नात्र सन्धिभाक् ॥८३॥ आकारे नैव सन्धिः स्याद्वाक्यस्मरणयोर्यथा । आ एवं मन्यसे राम आ एवमिति वै किल॥८४॥ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ ८५ ॥ ईषदर्थे जलं चोष्णं क्रियायोगे त्वमेहि च । मर्यादायां फलं चाग्रं व्याप्तौ चैवार्यसंपदः ॥ ८६ ॥ हिम ऋर्द्धिर्वारिऋद्धिरित्यादौ कस्य चिन्मते । न सन्धिरिति जानीहि व्यंजने सन्धिरुच्यते ॥ ८७॥ वर्गप्रथमवर्णानां पदान्तानां तृतीयकाः । घोषवत्सु स्वरे चैव भवन्ति न हि संशयः ॥ ८८ ॥ पञ्चमे पञ्चमावास्युस्तृतीयाश्चेति निश्चितम् । सौभाग्यभागसौरामो वाग्जिगीषुररिव्रजम् ॥८९॥ अजन्ताः षडंताः शब्दास्तज्जो वागनुत्तमा । वाग्मिता-वाङ्मिताचेतन्मे न्नं तन्मात्रमेव च ॥ ९०॥ तद्विदाराम तन्म-

न्दा तद्गीता राम तन्मयः । आज्ञात्रं राम वाज्ञात्रमेवं सर्वत्र बुध्यताम्॥९१॥ हकार स्यचतुर्थं वा रामवाग्घाख्यसंयुता । अन्भलःसन्तिवर्णानि तद्वविष्णुहुताशनः ॥ ९२ ॥ शकारो वा छकारः स्याद्रामवाक् क्षोभनाधुना । अप् छयोराम षट्च्छाया तच्छेषं वाञ्छितं तथा ॥९३॥ वाक् श्लक्ष्णा राम बालस्य तच्छ्लोकश्चतथैव हि ।पद्मे शकारः सर्वत्र ज्ञेयः शाब्दिकसत्तमैः॥९४॥ स्वरे तृतीयं जानीहि रामवागतिकोमला ॥ वागुणा राघवस्यैषा वागेषा मधुरा तव ॥ ९५ ॥ अवग्रहितं तदिति वा पदांति चोच्यतांस्वयम्।एवं बोद्धव्यमखिलमनुक्तमपि बालकैः॥९६ ङस्वोपधाश्च ङणनाभजन्ति द्वित्वमेव हि। कुङ्ङत्र च सुगण्णत्र भवन्नैव तत्परम्॥९७॥चवर्गे च टवर्गे चलकारे च तथा परे परूपं तकारस्य कथ्यते तदुदाहृतिः॥रामस्तच्चरति श्रीमांस्तच्छाद्यं न कदा चन।तज्जातं तझ्झकारेण तट्टीका तट्ठकारवत्॥९८॥ तड्डीनोपि तड्ढकारस्तण्णकारश्च तल्लघु । एवं सर्वत्र बोद्धव्यं विशेषेणापि बालकैः ॥ ४०० ॥ नकारस्य पदान्तस्य शकारो बिन्दुसंयुतः । चछयोर्जायते नित्यं कथ्यते तदुदाहृतिः ॥ १ ॥ श्रीमांश्चरति रामोयं भवांश्छादति विद्विषः । णकारो बिन्दुयुक्तः स्याट्टठयोश्च निगद्यते ॥ २ ॥ भगवांष्टीकतेरामो भवांष्ठकुर एव हि । तथयोश्च सकारः स्याद्भवांस्तरति सागरम् । ॥ ३ ॥ भवांस्तथा महाप्राज्ञो यथा रामोरघूद्वहः । पद्मेनुस्वारहीनस्याद्भवांश्चरति सर्वशः ॥ ४ ॥ प्रशाश्चिनोति नात्र

स्यान्निषेधादृग्रन्थकारिणाम् । भवाञ्छेते प्रभृतिषु शितुक् परे च पूर्ववत् ॥५॥ भवान्त्स्यात् सन्ति षट् सन्त इत्यादौ धुड्विधीयते । रामस्त्वं हंसइत्यादौ मोनुस्वारो विधीयते ॥ ६ ॥ त्वं करोषि प्रभृतिषु पराच्च वर्गपञ्चमम् । सय्यंतेत्यादिषु द्वित्वे विभाषयानुनासिकम् ॥ ७ ॥ तवर्गस्य लकारे च परे लत्वं विधीयते । तल्लुनाति रिपोः सैन्यं भवाल्लिखति सांप्रतम् ॥ ८ ॥ कथ्यतेथ विसर्गस्य सन्धिःर्बालकतोषकृत् । विसर्गः पररूपत्वं भजते हि विभाषया ॥ ९ ॥ रामश्श्रीते चिरं रामष्षाड्गुण्यमनुमोदते । रामस्सहायो मे भूयादेवं सर्वत्र बुध्यताम् ॥१०॥ विसर्गस्य शकारश्च चछयोःपरयोरिदम् । रामश्छायासमायुक्तइत्यादि स्वयमूह्यताम् ॥११॥ टठे षकारश्च यथा रामष्टीकाविशारदः । रामष्ठक्कुर एवात्र कखयोः पफयोस्तथा ॥१२॥ वा विसर्गो यथा रामःकरोति सुकृतं महत् । रामःखड्गधरो धीमान् रामःपचति पायसम् ॥१३॥ राम ᳲ फलानि चिनुते दण्डकायां बुभुक्षितः । निष्कृतं दुष्कृतं चाविष्कृतं दुष्कुलता तथा ॥१४॥ बहिष्कृतं च दुष्खंडमत्र इत्येष इष्यते । तिरस्करोती वासत्वं कां स्कानाम्रेडिते तथा ॥१५॥ उत्वं चाकारयोर्मध्ये यथा रामोत्रवर्धते ॥१६॥ रामो हसतिरामोयमित्यादौ चो त्वमिष्यते । रामआयातिनगरं श्रीराम इह तिष्ठति ॥ १७ ॥ राम उत्तमसौभाग्यो राम इच्छति सांप्रतम् । राम आकारसुभगो राम एति वनाद्गृहम् ॥ १८ ॥ राम औचत्यरहित इत्यादौ लुग्विधीयते ।

मते च कस्य चिद्यत्वं रामयेति च तदग्रहम् ॥ १९ ॥ राम यायाति सदनं रामा यांति निजालयम् । इत्यादौ लोप एव स्याद्भोगच्छेत्यादिकेपि च ॥२०॥ स्वरे भोमत्र भोयत्र भगो इह भगोयिह । अघो एहि अघोयेहि भवन्ते हि विभाषया॥२१॥ भगवन्नत्र भवति अघवन्नत्र मन्दिरे । अघो कुरु भगो कुरु कार्यं भोकुरु सांप्रतम् ॥ २२ ॥ श्रीहरिर्गच्छतीत्यादौ रेफ एव विधीयते । हरिरत्नं विष्णुरसावित्यादौ रेफ एवहि॥२३॥ समान्ता रमते रामो हरी रामोस्ति मानसे । विभूरमयति स्वान्तमित्यादौ रेफ लुग्भवेत् ॥ २४ ॥ पूर्वस्वरस्य दीर्घत्वमेवं सर्वत्र बुध्यताम् । रेफप्रकृति शब्दानां विशेषो दृश्यते यथा ॥ २५ ॥ मातर्याहि पुनर्याहि प्रातर्याहि गृहं प्रति । भ्रातर्गच्छपुनर्गच्छ रामोयातीति भेदभाक् ॥ २६ ॥ रामोत्र पुनरत्येति विशेषश्चिन्तितो महान् ॥ एऐ ओऔ प्रभृतिषु रेफ लोपः परोभवेत् ॥ २७ ॥ रामैरम्यं वनं जग्मे विष्णोरोचिः हरैरघो । गौरम्येत्यादि बोद्धव्यं परत्वाच्च मनोरथः ॥२८ ॥ व्यञ्जने चैष सइति लोप एव विधीयते ॥ सक एषक इत्यत्रा-सोनेषइतिनेवलुक् । ग्रन्थस्य गौरवभयान्मयानोक्तं सुविस्तरम् ॥३०॥ प्रबोधचन्द्रिकायां च कृतौ वैजलभूपतेः । एषा विशेषतः सुष्ठु समाप्ता सन्धिचन्द्रिका ॥ ७ ॥

प्रबोधचन्द्रिका समाप्ता ॥